आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ४७

वाचस्पतिमिश्रविरचितटीकासंवलितव्यासभाष्यसमेतानि

# पातञ्जलयोगसूत्राणि ।

तथा भोजदेवविरचितराजमार्तण्डाभिधवृत्तिसमेतानि

पातञ्जलयोगसूत्राणि ।

( सूत्रपाठसूत्रवर्णानुक्रमसूचीभ्यां च सनाथीकृतानि ) ।

एतत्पुस्तकं

वे० शा० रा० रा० " काशीनाथ शास्त्री आगाशे "

इत्येतैः संशोधितम् ।

तच्च

बी. ए. इत्युपपदधारिभिः

**विनायक गणेश आपटे**

इत्येतैः

पुण्याख्यपत्तने

श्रीमन् ' महादेव चिमणाजी आपटे ' इत्यभिधे-

यमहाभागप्रतिष्ठापिते

**आनन्दाश्रममुद्रणालये**

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

तृतीयेयमङ्कनावृत्तिः ।

शालिवाहनशकाब्दाः १८५४

खिस्ताब्दाः १९३२



मूल्यं रूपकत्रयम् ( रु० ३ )।

## आदर्शपुस्तकोल्लेखपत्रिका ।

अथैतेषां वाचस्पतिकृतटीकासंवलितव्यासभाष्यसमेतानां, तथा भोजदेवविरचितराजमार्तण्डाभिधवृत्तिसमेतानां योगसूत्राणां पुस्तकानि यैः परहितैकपरतया संस्करणार्थं मदत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च कृतज्ञतया प्रदर्श्यन्ते—

क. इति संज्ञितम्—मूलं सटीकभाष्योपेतं पूर्णं, मोहमय्यां मुद्रितम् ।

ख. इति संज्ञितम्—मूलं सटीकभाष्योपेतं पूर्णम्, एतत्पुस्तकं पुण्यपत्तननिवासिनां वे० शा० रा० रा० "मोरेश्वरशास्त्री वाईकर" इत्येतेषाम् ।

ग. इति संज्ञितम्—मूलं साभष्यं पूर्णं, कलिकातामुद्रितम् ।

घ. इति संज्ञितम्—मूलं सभाष्यं पूर्णं, काश्यां मुद्रितम् ।

ङ. इति संज्ञितम्—मूलं सभाष्यं पूर्णं, मोहमय्यां मुद्रितं महाराष्ट्रभाषाटीकोपेतम्, एतत्पुस्तकं पुण्यपत्तननिवासिनां रा० रा० "श्रीधर गुंडो कुवळेकर" इत्येतेषाम् ।

च. इति संज्ञितम्—मूलं सभाष्यं पूर्णम्, एतत्पुस्तकं पुण्यपत्तननिवासिनां श्री० रा० "मोरोबादादा फडणीस" इत्येतेषाम् ।

छ. इति संज्ञितम्—मूलं सभाष्यमपूर्णं पादद्वयपर्यन्तम्, एतत्पुस्तकं धारवाडग्रामनिवासिनां विद्यानन्दस्वामिनाम् ।

ज. इति संज्ञितम्—मूलं सटीकभाष्योपेतं पूर्णम्, एतत्पुस्तकं वे० शा० रा० रा० "सदाशिव गोविंद कान्हेरे" इत्येतैर्दत्तम् ।

झ. इति संज्ञिता—केवला टीका पूर्णा, एतत्पुस्तकं वटोदरग्रामनिवासिनां रा० रा० "जयशंकर प्रेमानन्द जोशी" इत्येतेषाम् ।

क. इति संज्ञितम्—मूलं वृत्तिसमेतं पूर्णं, कलिकातामुद्रितम् ।

ख. इति संज्ञितम्—मूलं वृत्तिसमेतं पूर्णं, बडलीग्रामनिवासिनां वे० शा० रा० रा० मार्तण्डदीक्षितपुत्राणां "यज्ञेश्वरदीक्षित बडलीकर" इत्येतेषाम् ।

ग. इति संज्ञितम्—मूलं वृत्तिसमेतं पूर्णं, पुण्यपत्तननिवासिनां कै० वा० श्री० रा० "मोरोबादादा फडणीस" इत्येतेषाम् ।

समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका ।

## तृतीयावृत्तेः किंचित्प्रास्ताविकम् ।

—०–:⊙:–०—

अयि महानुभावा विदितचरमेव श्रीमतां यत्, 'ब्रह्मविदाप्नोति परम्' 'ब्रह्मविद्ब्रह्मैव भवति' 'तमेव विदित्वाऽतिमृत्युमेति' इत्यादिभिर्भूयोभिः श्रुतिशिरोवचनैः परमपुरुषार्थसाधनार्थं 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' एवमादिना श्रुतिवचःकदम्बेन श्रवणमनननिदिध्यासनानि तत्साधनतयाऽऽम्नातानि। तत्र निदिध्यासनं प्राधान्यमवगाहते। निदिध्यासनं चैकतानतादिरूपो राजयोगापरपर्यायः समाधिः। तस्य च समाधेस्तत्त्वज्ञाने नान्तरीयकतया मुख्यसाधनत्वाच्छ्रीमान् परमकारुणिकः पतञ्जलिमुनिवरस्तद्दर्शनं समाधिसाधनविभूतिकैवल्याख्यचतुष्पादात्मकं सूत्रयांबभूव। तत्र प्राथमिके समाध्याख्यपादे एकपञ्चाशत्सूत्राणि। तेषु च सूत्रेषु योगलक्षणं, समाधौ द्रष्टुः स्वरूपं, चित्तद्वयः, विपर्ययरूपं, वृत्तिनिरोधोपायः, अभ्यासस्वरूपं, वैराग्यस्वरूपं, संप्रज्ञातसमाधिः, ईश्वरप्रणिधानं, सबीजः समाधिरित्यादयो विषयाः प्रतिपादिताः। द्वितीये साधनाख्ये पञ्चपञ्चाशत्सूत्रात्मके पादे तु व्युत्थितचित्तस्य योगसाधनं, अविद्यास्वरूपं, रागद्वेषाभिनिवेशस्वरूपं, सूक्ष्मक्लेशहानोपायः, दृश्यद्रष्टृस्वरूपं, बुद्धिसंयोगस्याविद्याहेतुरेवंविधा विषया व्याहृताः। तार्तीयीके पुनश्चतुष्पञ्चाशत्सूत्रघटिते च विभूतिनाम्नि पादे धारणाध्यानसमाधिस्वरूपं, असंप्रज्ञातसंप्रज्ञातयोश्चित्तपरिणामः, इन्द्रियजयोपायः, इन्द्रियजयफलं, विवेकजज्ञानस्वरूपं, विवेकजज्ञानफलं मोक्षश्चैवंप्रकारका विषया निर्दिष्टाः। तथा च चतुस्त्रिंशत्सूत्रसनाथिते तुरीये कैवल्यपादे जन्मादिपञ्चसिद्धयः, चतुर्विधा कर्मजातिः, वासनाक्षयः, वासनाक्षयोपपत्तिः, वस्तुज्ञानयोर्भेदः, धर्ममेघः समाधिः, जीवन्मुक्तिः, मोक्षस्वरूपमित्थंकारा विषयाः क्रमेणोक्ताः।

उपरिनिर्दिष्टमिदं पातञ्जलयोगदर्शनमति हि नाम गभीरार्थकं क्लिष्टं च विना व्याख्यानं मन्दप्रज्ञैरवगन्तुमशक्यमिति मनसि कृत्वा मध्यमाधिकारिणोऽनुजिघृक्षुः करुणावरुणालयः श्रीव्यासमहाभागस्तदुपरि भाष्यं प्रणिनाय। तदपि पुनरतितरां दुरूहविषयजटाजालजटिलमिति मन्वानः सकलशास्त्रपारावारपारीणो विचक्षणमूर्धन्यः परमदार्शनिकः श्रीवाचस्पतिमिश्रो मा नाम क्लेशमनुभूवन् पिपठिषव इति बलवदनुकम्पापरवशः सन् व्यासभाष्ये वृत्तिं रचयामास।

अथ प्रासङ्गिकं पतञ्जलिव्यासवाचस्पतिविषये मनाग्विचार्यते। तत्राऽऽदौ पतञ्जलिमधिकृत्याऽऽत्मनोऽभिप्रायमाविष्कर्तुमिच्छामः। तथा हि—

योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन।
योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि॥

इति विद्वज्जनरसनाग्रवर्तिना पद्येन योगसूत्रव्याकरणमहाभाष्यवैद्यकग्रन्थानां प्रणेता पतञ्जलिः पुनरेक एवेति प्रतीयते। तथैव—

सूत्राणि योगशास्त्रे वैद्यकशास्त्रे च वार्तिकानि ततः।
कृत्वा पतञ्जलिमुनिः प्रचारयामास जगदिदं त्रातुम्॥

( पत० च० ५। २५ ) इति पद्येनापि योगसूत्रव्याकरणभाष्यवैद्यकशास्त्रीयवार्तिकानामेक एव पतञ्जलिः कर्तेति ज्ञायते। तथा ख्रिस्ताब्दीयैकादशशतके सत्ताजुषा चरकटीकाकृता चक्रपाणिना चरकटीकायामुक्तेन—

पातञ्जलमहाभाष्यचरकप्रतिसंस्कृतैः।
मनोवाक्कायदोषाणां हन्त्रेऽहिपतये नमः॥

इत्यनेन पद्येन पातञ्जलमहाभाष्यचरकप्रतिसंस्कारकर्तैक एवेत्यवगम्यते। अपि च—

शब्दानामनुशासनं विदधता पातञ्जले कुर्वता
वृत्तिं राजमृगाङ्कसंज्ञकमपि व्यातन्वता वैद्यके।

वाक्चेतोवपुषां मलः फणिभृतां भर्त्रेव येनोद्धृत-
स्तस्य श्रीरणरङ्गमल्लनृपतेर्वाचो जयन्त्युज्ज्वलाः ॥

इति पद्येन पतञ्जलिमुपमानीकृत्य तत्तुल्योऽहमिति स्वीयं वर्णनं वितन्वता श्रीभोजदेवेनापि वृत्तिकृता योगव्याकरणवैद्यकप्रणेतुः पतञ्जलेरेकत्वं ध्वनितम् । उपरितनविवेचनेन योगव्याकरणवैद्यककर्ता पतञ्जलिरेक एवेति स्फुटी भवति । अन्ये तु पातञ्जलयोगसूत्रोपरि व्यासकृतभाष्यसद्भावात्, 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' (पा० सू० ४ । ३ । ११०) इत्यस्मिन्पाणिनीयसूत्रे पाराशर्यापरपर्यायव्यासशब्दोल्लेखात्, पाणिनेर्व्यासस्य प्राचीनत्वमायातम् । यस्य पतञ्जलेः सूत्राणामुपरि व्यासभाष्यं स पतञ्जलिरपि पाणिनेः प्राचीन इत्यपि स्फुटी भवति । महाभाष्यरचयिता पतञ्जलिस्तु पाणिनेरर्वाचीन इति सकलसंमतम् । अतो भाष्यकारपतञ्जलेर्योगसूत्रकर्ता पतञ्जलिर्भिन्न इति निष्पद्यते । अपि च वार्तिकोक्तशकन्ध्वादिगणे पतञ्जलिशब्ददर्शनात्, महाभाष्यकारपतञ्जलेर्वार्तिककारस्य प्राचीनत्वाच्च पतञ्जलिभिन्नत्वं व्यक्ती भवति । तेन च योगसूत्रकारोऽतितरां प्राचीनः, महाभाष्यकारस्तु तदपेक्षयाऽर्वाचीन इति स्फुटं प्रतीयते' इत्याहुः ।

अत्र मनाग्विचार्यते । योगेन चित्तस्येत्यादिपद्यं तु यद्यपि संप्रदायपरम्पराप्राप्तं पठ्यतेऽन्तेवासिभिरध्यापकमहाभागैश्च तथाऽपि न किल तावतैव महाभाष्यरचयितुः पतञ्जलेर्योगसूत्राणां प्रणेतृत्वं साधयितुं सुशकम् । एवंविधानां पद्यानां बलवत्तरप्रामाण्यसत्त्वां विना स्वीकारानर्हत्वात् । बलवत्तरप्रमाणेन व्याहतार्थत्वस्य प्रतीयमानत्वाच्च । पाराशर्यशिलालिभ्यामिति हि सूत्रयतो भगवतः पाणिनेः प्राचीनत्वमव्याहतमेव श्रीमतो व्यासस्य । ब्रह्मसूत्रेषु च 'एतेन योगः प्रत्युक्तः' (ब्र० सू० २।१।३) प्रसिद्धस्यैव प्रथममुपस्थितेः पतञ्जलिप्रणीतस्यैव च योगस्य प्रसिद्धतया तस्यैव ब्रह्मसूत्रगतयोगपदार्थौचित्यात्सं-

सिद्धं योगशास्त्रप्रणेतुः श्रीमतः पतञ्जलेः पाणिनितः प्राचीनत्वम् । महाभाष्यप्रणेता तु भगवान् पतञ्जलिः पाणिन्युत्तरकालिक एवेति स्पष्टमेवैतद्विदुषाम् । एवंत्वेऽपि भगवतः शेषस्यैव योगशास्त्रप्रणेतृत्वमिव व्याकरणमहाभाष्यकर्तृत्वमपि समुल्लिख्यते कैश्चित् । ततश्चानुमीयते द्वितीयः किलायं शेषावतारो भगवान्पतञ्जलिर्येन खलु जन्मान्तरे योगसूत्राणि प्रणीतवता पाणिन्युत्तरकालावतीर्णेन महाभाष्यं प्राणायीति । लक्ष्मणबलरामयोः शेषावतारत्वे बहुत्र पुराणेषु प्रसिद्धिः । तद्वदत्रापि शेषावताराणां बहुत्वकल्पने न किमपि बलवत्तरं बाधकं पश्यामः । अन्यथा तत्तत्पतञ्जलीनां पौर्वापर्यानुपपत्तेः । यश्च भगवता कात्यायनेन शकन्ध्वादिषु शब्देषु पठितः पतञ्जलिशब्दः सोऽयं योगसूत्रकर्तृपर एव तत्सामान्याद्भाष्यकारमभिधत्ते । कात्यायनस्य महाभाष्यतः प्राचीनत्वात् । एतेन पतञ्जलीनां बहुत्वं सिध्यतीति केचित् । अन्ये तु नैतत्सहन्ते । योगेनेति पद्ये पतञ्जल्यैक्यप्रतिपादकपर्थं पुनरतितरां चिरन्तनैः पतञ्जलिचरितकृद्रामभद्रचरकव्याख्यानप्रणेतृचक्रपाणिपातञ्जलयोगसूत्रवृत्तिकारभोजदेवादिभिः 'सूत्राणि योगशास्त्रे' 'पातञ्जलमहा०' 'शब्दानामनुशासनं विदधता०' इत्यादिस्वीयस्वीयपद्येषु समादृतवद्भिः पुनरेकस्यैव पतञ्जलेः स्वीकारात् । तद्योगेनेति पद्यस्य निर्मूलत्वेन त्यक्तुमतितरामन्याय्यत्वात् । तथा च प्रायो द्वादशशताब्दीतः प्राक्संजातेन वाक्यपदीयप्रणेत्रा भर्तृहरिणा वाक्यपदीये ब्रह्मकाण्डे—

कायवाग्बुद्धिविषया ये मलाः समवस्थिताः ।
चिकित्सालक्षणाध्यात्मशास्त्रैस्तेषां विशुद्धयः ॥

इति पद्येन महाभाष्यकारं वर्णयता त्रिविधमलोज्जासनं खल्वेकपतञ्जलिकर्तृकमेवेति ध्वनितम् । तदपि योगेनेति पद्यं क्रोडीकृत्यैवेति प्रतीयते । अतोऽपि हेतोस्तत्पद्यं निर्मूलमिति वक्तुं नोचितम् । 'एतेन योगः प्रत्युक्तः' इति व्याससूत्रमप्यस्मिन्नर्थे न विरुध्यते । तत्र सामान्ययोगपदोपादानात्, श्वेताश्वतरोपनिषदि—

त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा संनिवेश्य ।
ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि सर्वाणि भयावहानि ॥ ( श्वे० २।८ )

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् ॥
तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥ (का० २।१०–११)

इत्यादिश्रुत्युक्तयोगस्यैव तत्र वक्तुर्विवक्षितत्वात् ।

पातञ्जलसूत्रोपरि व्यासभाष्यसद्भावात्, पाणिनीयपाराशर्येति सूत्रे व्यासशब्दोल्लेखात्, पाणिनितः पुनरतितरामर्वाचीनस्य पतञ्जलेः सूत्रेषु कथं नु नाम व्यासभाष्यं संभवति, इत्यपि न शङ्कनीयम् । यः खलु पाणिनिनिर्दिष्टो व्यासस्तेनैव पुनः पातञ्जलसूत्रभाष्यप्रणेत्रा भाव्यमिति न खलु विनिगमनास्ति । तत्र पाराशर्येतरव्यासकल्पनाऽपि कर्तुं युक्ता । न केवलं युक्ता किंत्ववश्यं विधातव्यैव। नो चेत्, अपि नाम कथं नु योगप्रत्याख्यानकृद्व्यासः पातञ्जलयोगसूत्रेषु भाष्यं विदध्यात् । एतेनापि हेतुना व्यासानेकत्वं शरणीकरणीयम् ।

महाभाष्यकृतः पतञ्जलेरतिमात्रप्राचीनस्य वार्तिककर्तुः शकन्ध्वादिगणपठितपतञ्जलिशब्दोऽपि न तद्बहुत्वं समर्थयितुमीष्टे । ‘ वार्तिकोक्तगणा आकृतिगणाः ’ इति निश्चितप्रायत्वात् । ततश्च महाभाष्यकृत्पतञ्जलिप्रादुर्भावोत्तरं तच्छब्दस्य तत्र निवेशसंभवात् । अस्मिन्नर्थे ‘ महाभाष्यमात्रोक्तौ शारीरकसूत्रभाष्यस्यापि बोधः स्यादिति पातञ्जलपदम् । तावन्मात्रोक्तौ चरकेऽतिव्याप्तिरतो महाभाष्येति ’ इति ग्रन्थेन चरकपदेनोपलक्षिततट्टीकायामतिव्याप्तिं संभावयन् ‘ पातञ्जले महाभाष्ये ’ इति पद्ये चन्द्रकलाख्यशेखरटीकाप्रणेता महामहोपाध्यायो भैरवमिश्रोऽप्यनुकूलः । एतावता स्वस्वबुद्धिबलोदयं केचन पतञ्जलिबहुत्वं व्याहरन्ति, अन्ये तु पुनरैक्यं संसाधयन्ति । एवंविधे महति विरोधे प्रसक्ते युक्तायुक्तविवेकचतुराः सुधिय एवात्रत्यं तत्त्वं विभावयन्तु ।

अथायं भगवान्पतञ्जलिः कदा कस्मिन्वा जनपदे कस्मिंश्चान्वये प्रादुर्भूयाऽऽत्मनो जनुषा निखिलं पुनरेतद्भारतवर्षमाविभरांबभूव तद्विषयकं किंचिदुल्लिख्यते । साकल्येन तच्चरितं तु श्रीरामभद्रदीक्षितविरचितपतञ्जलिचरितादवगन्तव्यम् ।

पुरैकदा भगवता गिरिजाजानिना शंभुना नियुक्तः सहस्राननः शेषो भूमौ प्रादुर्भवितुं निरवद्यं स्थानमन्विष्यन गोनर्ददेशीये कस्मिंश्चिदाश्रमे पुत्रार्थं चिराय सवितारमाराधयन्तीं गोणिकानाम्नीं कामपि तपस्विनीमद्राक्षीत् । ततस्तदीयनिरुपमतेजोविशेषभराक्रान्तहृदयस्तामेव स्वजननीं विभाव्य सूर्यार्घ्यप्रदानकाले तस्या अञ्जलौ प्रविवेश । ततश्च यदा सा सवित्रेऽर्घ्यं समर्पयामास तदात्व एव धृततापसाकृतिः स साकं जलेन भूमौ निपपात । संवीक्ष्य तं तेजःपुञ्जविरचिताकृतिं बालार्कमिव बालकं ' मदीय एवायं तनयः प्राक्तनसुकृतसंचयविलासात्प्रादुर्बभूव ' इति मनसा विभाव्य तस्य नामधेयमञ्जलेः पतित इति पतञ्जलिरित्यकरोत् । ततो भूयसा कालेन लोकोपकृतये महामहिमशाली भगवान्पतञ्जलिः पाणिनीयाष्टके महाभाष्यं व्यररचत् । ' गोनर्ददेशे कस्यचिदृषेरञ्जलेः संध्याकरणसमये पतित इत्यैतिह्यात् ' इति 'अचोऽन्त्यादि टि' ( पा० सू० १ । १ । ६४ ) सूत्रे नागोजीभट्टः । किमपि वा भवतु । अञ्जलेः पतित इति पतञ्जलिरित्येतस्मिन्वस्तुनि न काऽपि विप्रतिपत्तिः । अयं च पतञ्जलिः ख्रिस्ताब्दारम्भात्प्राक्सार्धशतक आसीदिति 'अरुणद्यवनः साकेतम् ' ( पा० सू० ३ । २ । १११ ) ' पुष्पमित्रो यजते ( पा० सू० ३ । १ । २६ ) ' पुष्पमित्रं याजयामः ' ( पा० सू० ३ । २ । १२३ ) ' मौर्यैर्हिरण्यार्थिभिरर्चाः प्रकल्पिताः ' ( पा० सू० ५।३। ९९) इत्यादिभिर्महाभाष्यस्थैस्तदुल्लेखैरनुमातुं शक्यते । मौर्यपुष्पमित्रादयो हि राजानः ख्रिस्तशकोदयात्पूर्वं तृतीयादिशतकेषु बभुवुरित्यैतिह्यधुरीणानां राद्धान्तः ।

पातञ्जलयोगसूत्रे भाष्यप्रणेता व्यासो वेदविभागाष्टादशपुराणभारतकृतो व्यासाद्भिन्न इति भाति । व्यासनामसु देवीभागवत-

विष्णुलिङ्गवाय्वादिषु पुराणेषु विसंवादो दरीदृश्यते । प्रतिमन्वन्तरं प्रति द्वापरमेकैको व्यासोऽवतरतीति सार्वत्रिकी प्रसिद्धिः । वैवस्वतमन्वन्तरेऽद्य यावत्पुनरष्टाविंशतिसंख्याकानि द्वापराण्यभूवन् । प्रतिद्वापरमेकैक इति व्यासा अप्यष्टाविंशतिसंख्याका बभूवुः । तेष्वन्यतमोऽष्टाविंशो व्यासः कृष्णद्वैपायनापरपर्यायः पाराशर्यः ।

तदुक्तम्—ततः शक्तिर्जातुकर्ण्यः कृष्णद्वैपायनस्ततः ।
अष्टाविंशतिसंख्येयं कथिता या मया श्रुता ॥
( दे० भा० १ । ३ । ३३ )

प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत्ततः ।
कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो नृप ॥
व्यासरूपमहं कृत्वा संहरामि युगे युगे ।
चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ॥ ( मत्स्य०५३.८-९)
शक्तेः पराशरः पुत्रस्तस्य वंशं निबोध मे ।
यस्य द्वैपायनः पुत्रः स्वयं विष्णुरजायत ॥

( मत्स्यपु० २०१ । ३१ ) इत्यादिभिः पौराणवचनैः ।

कुरुक्षेत्रे समासीनं व्यासं मतिमतां वरम् ।
महाभारतकर्तारं सर्वशास्त्रविशारदम् ॥
पुराणागमवक्तारं वेदवेदाङ्गपारगम् । ( ब्रह्मपु० २६.६ )
जिज्ञासितं सुसंपन्नमपि ते महदद्भुतम् ।
कृतवान् भारतं यस्त्वं सर्वार्थपरिबृंहितम् । (भाग०१।५.३)

एवमादिभिर्भूयोभिर्वचोभिर्वेदविभागपुराणभारतादीनां प्रणेता एक एव व्यास इति प्रतीयते । परं चात्र व्यासवर्णने वेदविभागपुराणादिवदुल्लेखितुं युक्तमपि योगसूत्रभाष्यं ब्रह्मसूत्रं च यतो नोल्लिखितं ततोऽपि जानीमो वयं पुराणादिकर्तुर्व्यासाद्योगसूत्रभाष्यप्रणेता ब्रह्मसूत्रकारो व्यासोऽर्वाचीन इति । वेदव्यासनाम्नैका या खलु स्मृतिः प्रसिद्धा साऽपि वेदविभागादिप्रणेतृव्यासकर्तृकेति

वाराणस्यां सुखासीनं वेदव्यासं तपोनिधिम् ।
पप्रच्छुर्मुनयोऽभ्येत्य धर्मान् वर्णव्यवस्थितान् ॥

(व्यासस्मृ० १ । १) अत्रत्यवेदव्यासशब्देनैव ज्ञायते । अष्टादशपुराणानां पुनरेक एव व्यासः प्रणेता वा भिन्नभिन्नव्यासकर्तृकाणि पुराणानीत्यपि शङ्का पुराणानां सूक्ष्मेक्षिकया पर्यालोचने कृते पुरतः समुदेति । एकस्यैवार्थस्य बहुत्रोल्लेखात्सूर्यचन्द्रवंशवर्णनाविरोधाच्च । तथाऽपि स पुनरुक्तवंशवर्णनविरोधादिदोषः—

क्वचित्क्वचित्पुराणेषु विरोधो यदि लभ्यते ।
कल्पभेदादिभिस्तत्र व्यवस्था सद्भिरिष्यते ॥

इति न्यायेन कथमपि परिहर्तव्यः । एवं च वेदविभागादिकृतो व्यासात्पातञ्जलयोगसूत्रप्रणेता व्यासो भिन्नोऽर्वाचीनश्चेति निर्विचिकित्सं सिध्यति । अत्र व्यासविषये बहु वक्तव्यं परं विस्तरभयादुपसंह्रियते ।

वाचस्पतिमिश्रैर्नैका व्याख्या व्यासभाष्योपरि प्रणीता । भाष्यतत्त्वं जिज्ञासूनां भूयिष्ठमुपकुर्वतीयं सरला सुगमा टीका यत्सत्यं पिपठिषूणां समाह्लादयति चेतः । वाचस्पतिश्चायं—

न्यायसूचीनिबन्धोऽसावकारि सुधियां मुदे ।
श्रीवाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे(८९८) ॥

इति न्यायसूचीनिबन्धीयेन पद्येन स्वकीयं कालमुल्लिलेख । अयं च प्रायो वैक्रमः कालः । तेन शालिवाहनस्याष्टमे शतकेऽस्य सद्भावः सिध्यति । अयं च मैथिलो ब्राह्मण इति केचित् । मिश्रपदेन गौड इति चापरे मन्यन्ते । यतो मिश्रपदान्तानि गौडब्राह्मणनामानीत्यपि केचन प्रतिपादयन्ति । अन्येऽपि पुनर्भूयांसो 'वाचस्पतिमिश्रः' इति नामधेयमलंकुर्वाणा विद्वांसः श्रवणसरणिमाटीकन्ते तेष्वन्यतमोऽयं पण्डितप्रकाण्डो भामतीप्रणेताऽप्रतिहतपाण्डित्यप्रसरोऽतितरां प्रसिद्ध इति न खलु संशयावसरः । इतोऽधिकमस्य विषये संप्रति नोल्लेखितुं प्रभवामो वयम् ।

अस्मिन्पुस्तके राजमार्तण्डाभिधा भोजदेवविरचिता वृत्तिः स्वात-

न्त्येण संगृहीता । टीकाकृतां दोषाः श्रीमता भोजदेवेन स्वकीयवृत्तेरुपोद्घाते 'दुर्बोधं यदतीव तद्विजहाति०' इति पद्येन निर्दिष्टाः। टीकादिषु संभाव्यमानांस्तान्सर्वानपि दोषान्सुविमृश्य वृत्तिकृता भोजदेवेन प्रणीतेयं पातञ्जलयोगसूत्रवृत्तिर्बाढं सर्वाङ्गीणतया समीचीनेत्यत्र न खलु स्तोकोऽपि संदेहावसरः। विरलविरलाः खलु भोजदेवसदृशा भूपतयो येषु हि नैसर्गिकसहावस्थानाविरोधित्वं सुदूरमुत्सार्य लक्ष्मीरिव सरस्वत्यपि निजास्पदमकार्षीत्। महाभागश्चायं 'श्रीरणरङ्गमल्लः' इतिविरुदालंकृतः पण्डितप्रकाण्डः शालिवाहनस्य दशमे शतके नैज्या सत्तया भारतवर्षमलंचकार। धारानगरी (धार) पुनरस्य राजधानी। न केवलमयं विद्वत्पुंगवः किंतु परमधार्मिकधौरेयोऽपि खल्वत्रवर्तिष्ट। अनेन च भूयांसो ग्रन्था निर्मिताः। तेषु (१) 'रामायणचम्पूः, (२) सरस्वतीकण्ठाभरणम्, (३) आयुर्वेदसर्वस्वम्, (४) शब्दानुशासनम्, (५) प्रश्नचिन्तामणिरित्यादयस्तु पुनरतिमात्रं प्रसिद्धाः।

महाभागा विद्वांसः श्रीरामानन्दयतिकृता (१) मणिप्रभा, श्रीनारायणतीर्थविनिर्मिता (२) योगसिद्धान्तचन्द्रिका, तत्कृतैव (३) सूत्रार्थबोधिनी, हरिप्रसादनिर्मिता (४) योगसूत्रवैदिकवृत्तिः, अनन्तपण्डितविरचिता (५) पदचन्द्रिका, श्रीसदाशिवेन्द्रसरस्वतीविरचितो (६) योगसुधाकरः, श्रीनागेशभट्टविरचिता (७) भाष्यच्छायाख्या योगसूत्रवृत्तिः, विज्ञानभिक्षुविरचितं (८) व्यासभाष्यवार्तिकम्, इत्यादयो नैके प्रबन्धाः पातञ्जलयोगदर्शने नयनपथगोचरी भवन्ति। परं सकलेष्वपि तेषु सर्वतन्त्रस्वतन्त्रवाचस्पतिमिश्रविरचितव्याख्यैव सर्वाङ्गमनोहरेति खल्वतिरोहितमेवेदम्। अन्यदेव पुनरस्या व्याख्यायाः सौभाग्यम्। अत एवैतस्यामानन्दाश्रमसंस्था बलवत्पक्षपातिनी संवृत्ता। योगसूत्रवृत्तिष्वपि भोजदेववृत्तिरेव सकलवृत्त्यतिशायिनीति विभावनयैवात्रावसरमलब्ध।

आनन्दाश्रमीयग्रन्थरसास्वादलोलुपा धीमन्तः स्खलननिसर्गत्वा-

त्पुंसां प्रास्ताविकेऽस्मिन् समीक्ष्यमाणं दोषगणमपहाय गुणलवमेव संगृह्णन्तु श्रीमन्त इति भक्तीभावपुरःसराऽभ्यर्थनेति शम् ।

विद्वज्जनकृपाभिलाषुकः—

मार्ग० व० १० । १८५४ } रानडे-इत्युपाभिधगोविन्दात्मजः
पुण्यपत्तनम् । } पुरुषोत्तमशर्मा ।

# अथ पातञ्जलयोगसूत्राणां वर्णानुक्रमसूची ।

ह.



समाप्तेयं पातञ्जलयोगसूत्राणां वर्णानुक्रमसूची ।

ॐ तत्सद्ब्रह्मणे नमः।

वाचस्पतिकृतटीकासंवलितव्यासभाष्यसमेतानि

# पातञ्जलयोगसूत्राणि।

—:०:—

## ( तत्र समाधिपादः प्रथमः )।

( अथ व्यासभाष्यम् )।

* यस्त्यक्त्वा रूपमाद्यं प्रभवति जगतोऽनेकधाऽनुग्रहाय
प्रक्षीणक्लेशराशिर्विषमविषधरोऽनेकवक्त्रः सुभोगी।
सर्वज्ञानप्रसूतिर्भुजगपरिकरः प्रीतये यस्य नित्यं
देवोऽहीशः स वोऽव्यात्सितविमलतनुर्योगदो योगयुक्तः॥ १॥

( अथ पातञ्जलसूत्राणि )।

**अथ योगानुशासनम्॥ १॥**

**अथेत्ययमधिकारार्थः।**

---

( अथ वाचस्पतिकृता टीका )।

नमामि जगदुत्पत्तिहेतवे वृषकेतवे।
क्लेशकर्मविपाकादिरहिताय हिताय च॥ १॥
नत्वा पतञ्जलिमृषिं वेदव्यासेन भाषिते।
संक्षिप्तस्पष्टबह्वर्था भाष्ये व्याख्या विधास्यते[1]॥ २॥

इह हि भगवान्पतञ्जलिः प्रारिप्सितस्य शास्त्रस्य संक्षेपतस्तात्पर्यार्थं प्रेक्षावत्प्रवृत्त्यङ्गं श्रोतुश्च सुखावबोधार्थमाचिख्यासुरादाविदं सूत्रं रचयांचकार—**अथ योगानुशासनम्**। तत्र प्रथमावयवमथशब्दं व्याचष्टे—**अथेत्ययमधिकारार्थः**। अथैष ज्योतिरितिवत्, न त्वानन्तर्यार्थः। अनुशासनमिति हि शास्त्रमाहानुशिष्यतेऽनेनेति व्युत्पत्त्या। न चास्य शमदमाद्यनन्तरं प्रवृत्तिरपि तु तत्त्वज्ञानचिख्यापयिषानन्तरम्। जिज्ञासाज्ञानयोस्तु स्यात्। यथाऽऽम्नायते—" तस्माच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येत् " [ बृ० ४।४।२३ ] इति। शिष्यप्रश्नतपश्चरणरसायनाद्युपयोगानन्तर्यस्य च संभवेऽपि नाभिधानं, शिष्यप्रतीतिप्रवृत्त्योरनुपयोगात्प्रामाणिकत्वे योगानुशासनस्य तदभावेऽप्युपेयत्वादप्रामाणिकत्वे च तद्भावेऽपि हेयत्वात्। एतेन तत्त्वज्ञानचिख्यापयिषयोरानन्तर्याभिधानं परास्तम्। अधिकारार्थत्वे तु शास्त्रेणाधिक्रियमाणस्य प्रस्तूयमानस्य योगस्याभिधानात्सकलशा-

---

* अयं श्लोको घ. पुस्तके नास्ति। वाचस्पतिमिश्रैरेतच्छ्लोकस्य व्याख्या न कृता। विज्ञानभिक्षुणा तु कृता।

---

१ क. विधीयते। २ ख. ज. झ. इत्यादि।

योगानुशासनं शास्त्रमधिकृतं वेदितव्यम् । योगः
समाधिः । स च सार्वभौमश्चित्तस्य धर्मः ।

स्त्रतात्पर्यार्थव्याख्यानेन शिष्यः सुखेनैव बोधितश्च प्रवर्तितश्च भवतीति । निःश्रेयसस्य हेतुः समाधिरिति हि श्रुतिस्मृतीतिहासपुराणेषु प्रसिद्धम् । ननु किं सर्वसंदर्भगतोऽथशब्दोऽधिकारार्थः, तथा सति " अथातो ब्रह्मजिज्ञासा " [ ब्र० सू० १ । १ । १ ] इत्यादावपि प्रसङ्ग इत्यत आह—**अयमिति** । ननु-

हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः ।

इति योगियाज्ञवल्क्यस्मृतेः कथं पतञ्जलेर्योगशास्त्रकर्तृत्वमित्याशङ्क्य सूत्रकारेणानुशासनमित्युक्तम् । शिष्टस्य शासनमनुशासनमित्यर्थः । यदाऽयमथशब्दोऽधिकारार्थस्तदैष वाक्यार्थः संपद्यत इत्याह—**योगानुशासनं शास्त्रमधिकृतमिति** । ननु व्युत्पाद्यमानतया योगोऽत्राधिकृतो न तु शास्त्रमित्यत आह—**वेदितव्यमिति** । सत्यं व्युत्पाद्यमानतया योगः प्रस्तुतः, स तु तद्विषयेण शास्त्रेण करणेन व्युत्पाद्यः । करणगोचरश्च व्युत्पादकस्य व्यापारो न कर्मगोचर इति कर्तृव्यापारविवक्षया योगविषयस्य शास्त्रस्याधिकृतत्वं वेदितव्यम् । शास्त्रव्यापारगोचरतया तु योग एवाधिकृत इति भावः । अधिकारार्थस्य चाथशब्दस्यान्यार्थं नीयमानोदकुम्भदर्शनमिव श्रवणं मङ्गलायापि कल्पत इति मन्तव्यम् । शब्दसंदेहनिमित्तमर्थसंदेहमपनयति—**योगः समाधिरिति** । ' युज समाधौ ' [ धा० पा० ४ ] इत्यस्माद्व्युत्पन्नः समाध्यर्थो न तु ' युजिर् योगे ' [ धा०पा०७ ] इत्यस्मात्संयोगार्थ इत्यर्थः । ननु समाधिरपि वक्ष्यमाणस्याङ्गिनो योगस्याङ्गम् । न चाङ्गमेवाङ्गीत्यत आह—**स च सार्वभौमः** । चस्त्वर्थोऽङ्गादङ्गिनं भिनत्ति । भूमयोऽवस्था वक्ष्यमाणा मधुमती मधुप्रतीका विशोका संस्कारशेषास्ताश्चित्तस्य, तासु सर्वासु विदितः सार्वभौमश्चित्तवृत्तिनिरोधलक्षणो योगः । तदङ्गं तु समाधिर्नैवंभूतः । व्युत्पत्तिनिमित्तमात्राभिधानं चैतद्योगः समाधिरिति । अङ्गाङ्गिनोरभेदविवक्षामात्रेण प्रवृत्तिनिमित्तं तु योगशब्दस्य चित्तवृत्तिनिरोध एवेति परमार्थः । वृत्तयो ज्ञानान्यात्माश्रयाण्यतस्तन्निरोधोऽप्यात्माश्रय एवेति ये पश्यन्ति तन्निरासायाऽऽह—**चित्तस्य धर्म इति** । चित्तशब्देनान्तःकरणं बुद्धिमुपलक्षयति । न हि कूटस्थनित्या चितिशक्तिरपरिणामिनी ज्ञानधर्मा भवितुमर्हति । बुद्धिस्तु भवेदिति भावः । स्यादेतत्सार्वभौमश्चेद्योगो हन्त भोः क्षिप्तमूढविक्षिप्ता अपि चित्तभूमयः । अस्ति च परस्परापेक्षया वृत्तिनिरोधोऽप्यास्विति तत्रापि योगत्वप्रसङ्ग इत्याशङ्क्य हेयोपादेयभूमीरुपन्यस्यति—

१ ख. °ल्लवष्टतस्त्र°।

क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति चित्तभूमयः । तत्र विक्षिप्ते चेतसि विक्षेपोपसर्जनीभूतः समाधिर्न योगपक्षे वर्तते ।

यस्त्वेकाग्रे चेतसि सद्भूतमर्थं प्रद्योतयति[3] क्षिणोति च क्लेशान्कर्मबन्धनानि श्लथयति निरोधमभिमुखं करोति स संप्र-

---

क्षिप्तमित्यादि । क्षिप्तं सदैव रजसा तेषु तेषु विषयेषु क्षिप्यमाणमत्यन्तमास्थिरम् । मूढं तु तमःसमुद्रेकान्निद्रावृत्तिमत् । क्षिप्ताद्विशिष्टं विक्षिप्तम् । विशेषोऽस्थेमबहु-लस्य कादाचित्कः स्थेमा । सा चास्यास्थेमबहुलता सांसिद्धिकी वा वक्ष्यमाणव्याधि-स्त्यानाद्यन्तरायजनिता वा । एकाग्रमेकतानम् । निरुद्धसकलवृत्तिकं संस्कारमात्रशेषं चित्तं निरुद्धम् । तत्र क्षिप्तमूढयोः सत्यपि परस्परापेक्षया वृत्तिनिरोधे पारम्पर्येणापि निःश्रेयसहेतुभावाभावात्तदुपघातकत्वाच्च योगपक्षाद्दूरोत्सारितत्वमिति न तयोर्योगत्वं निषिद्धम् । विक्षिप्तस्य तु कादाचित्कसद्भूतविषयस्थेमशालिनः संभाव्येत योगत्वमिति निषेधति । तत्र विक्षिप्ते चेतसि समाधिः कादाचित्कसद्भूतविषयस्य चित्तस्य स्थेमा न योगपक्षे वर्तते । कस्मात् । यतस्तद्विपक्षविक्षेपोपसर्जनीभूतः । विपक्षवर्गान्तर्गतस्य[5] हि स्वरूपमेव दुर्लभं प्रागेव कार्यकरणं न खलु दहनान्तर्गतं बीजं त्रिचतुरक्षणावस्थि-तमुप्तमप्यङ्कुराय कल्पत इति भावः ।

यदि विक्षेपोपसर्जनीभूतः समाधिर्न योगः कस्तर्हीत्यत आह—यस्त्वेकाग्रे चेत-सीति । भूतमिति समारोपितमर्थं निवर्तयति । निद्रावृत्तिरपि स्वालम्बने तमसि भूते भवत्येकाग्रेत्यत उक्तम्— सदिति । शोभनं नितान्ताविर्भूतं सत्त्वं तमःसमुद्रेकस्त्वशो-भनस्तस्य क्लेशहेतुत्वादिति । द्योतनं हि तत्त्वज्ञानमागमाद्वाऽनुमानाद्वा भवदपि परोक्ष-रूपतया न साक्षात्कारवतीमविद्यामुच्छिनत्ति । द्विचन्द्रदिङ्मोहादिष्वनुच्छेदकत्वाद्त आह—प्रेति । प्रकारो हि प्रकर्षं द्योतयन्साक्षात्कारं सूचयति । अविद्यामूलत्वादस्मितादीनां क्लेशानां विद्यायाश्चाविद्योच्छेदरूपत्वाद्विद्योदये चाविद्यादिक्लेशसमुच्छेदो विरोधित्वात्का-रणविनाशाच्चेत्याह—क्षिणोति चेति । अत एव कर्मरूपाणि बन्धनानि श्लथयति । कर्म चात्रापूर्वमभिमतम् । कार्ये कारणोपचारात् । श्लथयति स्वकार्यादवसादयति । वक्ष्यति हि—" सति मूले तद्विपाकः " [ २ । १३ ] इति । किंच निरोधमभिमुखं

---

१ ख. °तस्य भू° । २ ख. °दः । आत्मनश्चित्तवृत्तिभिरेव विहारं कुर्वन्ति । तासां रोधे विहार-शून्यास्ताभिः सह वैराग्येन ब्रह्मणि लयं गच्छन्ति । नित्य साक्षादात्मा केवलान्मसंस्कारशेषं समाधिना लयं कृत्वा ब्रह्मणि योगे योगः । स च योगिना हृदि योगे भिन्नाभावः सार्वभौम इति । त° । ३ घ. ङ. °ति प्रक्षि° । ४ ज. °यश्चित्तस्थेम्ना न । ५ क. ज. °र्थकार° । ६ ख. ङ. प्रशब्दो हि ।

ज्ञातो योग इत्याख्यायते । स च वितर्कानुगतो विचारानुगत आनन्दानुगतोऽस्मितानुगत इत्युपरिष्टान्निवेदयिष्यामः । सर्ववृत्तिनिरोधे त्वसंप्रज्ञातः समाधिः ॥ १ ॥

तस्य लक्षणाभिधित्सयेदं सूत्रं प्रववृते—

**योगश्चित्तवृत्तिनिरोधः ॥ २ ॥**

सर्वशब्दाग्रहणात्संप्रज्ञातोऽपि योग इत्याख्यायते । चित्तं हि प्रख्याप्रवृत्तिस्थितिशीलत्वात्त्रिगुणम् ।

प्रख्यारूपं हि चित्तसत्त्वं रजस्तमोभ्यां संसृष्टमैश्वर्यविषय-

---

करोत्यभिमुखी करोति । स च संप्रज्ञातश्चतुष्प्रकार इत्याह—स चेति । असंप्रज्ञातमाह—सर्ववृत्तीति । रजस्तमोमयी किल प्रमाणादिवृत्तिः सात्त्विकीं वृत्तिमुपादाय संप्रज्ञाते निरुद्धा । असंप्रज्ञाते तु सर्वासामेव निरोध इत्यर्थः । तदिह भूमिद्वये समाधा या मधुमत्यादयो भूमयस्ताः सर्वास्तासु विदितः सार्वभौम इति सिद्धम् ॥१॥

द्वितीयं सूत्रमवतारयति—तस्य लक्षणेति । तस्येति पूर्वसूत्रोपात्तं द्विविधं योगं परामृशति—योगश्चित्तवृत्तिनिरोधः । निरुध्यन्ते यस्मिन्प्रमाणादिवृत्तयोऽवस्थाविशेषे चित्तस्य सोऽवस्थाविशेषो योगः । ननु संप्रज्ञातस्य योगस्याव्यापकत्वादलक्षणमिदम् । अनिरुद्धा हि तत्र सात्त्विकी चित्तवृत्तिरित्यत आह—सर्वशब्दाग्रहणादिति । यदि सर्वचित्तवृत्तिनिरोध इत्युच्यते भवेदव्यापकं संप्रज्ञातस्य । क्लेशकर्मविपाकाशयपरिपन्थी चित्तवृत्तिनिरोधस्तु तमपि संगृह्णाति । तत्रापि राजसतामसचित्तवृत्तिनिरोधात्तस्य च तद्भावादित्यर्थः । कुतः पुनरेकस्य चित्तस्य क्षिप्तादिभूमिसंबन्धः, किमर्थं चैवमवस्थस्य चित्तस्य वृत्तयो निरोद्धव्या इत्याशङ्क्य प्रथमं तावदवस्थासंबन्धे हेतुमुपन्यस्यति—चित्तं हीति । प्रख्याशीलत्वात्सत्त्वगुणम् । प्रवृत्तिशीलत्वाद्रजोगुणम् । स्थितिशीलत्वात्तमोगुणम् । प्रख्याग्रहणमुपलक्षणार्थम् । तेनान्येऽपि सात्त्विकाः प्रसादलाघवप्रीत्यादयः सूच्यन्ते । प्रवृत्त्या च परितापशोकादयो राजसाः । प्रवृत्तिविरोधी तमोवृत्तिधर्मः स्थितिः । स्थितिग्रहणाद्गौरवावरणदैन्यादय उपलक्ष्यन्ते । एतदुक्तं भवति—एकमपि चित्तं त्रिगुणनिर्मिततया गुणानां च वैषम्येण परस्परविमर्दवैचित्र्याद्विचित्रपरिणामं सदनेकावस्थमुपपद्यत इति ।

क्षिप्ताद्या एव चित्तस्य भूमीर्यथासंभवमवान्तरावस्थाभेदवतीरादर्शयति— प्रख्यारूपं हीति । चित्तरूपेण परिणतं सत्त्वं चित्तसत्त्वम् । तदेवं प्रख्यारूपतया सत्त्वप्राधान्यं चित्तस्य दर्शितम् । तत्र चित्ते सत्त्वात्किंचिदूने रज-

---

१ ग. घ. ङ. च. 'ष्टात्प्रवे' । २ ख. 'वर्तते ।

प्रियं भवति । तदेव तमसाऽनुविद्धमधर्माज्ञानावैराग्यानैश्वर्यो- पगं भवति । तदेव प्रक्षीणमोहावरणं सर्वतः प्रद्योतमानमनुविद्धं रजोमात्रया धर्मज्ञानवैराग्यैश्वर्योपगं भवति ।

तदेव रजोलेशमलापेतं स्वरूपप्रतिष्ठं सत्त्वपुरुषान्यता- ख्यातिमात्रं धर्ममेघध्यानोपगं भवति । तत्परं प्रसंख्या-

स्तमसी यदा मिथः समे च भवतस्तदैश्वर्यं च विषयाश्च शब्दादयस्तान्येव प्रियाणि यस्य तत्तथोक्तम् । सत्त्वप्राधान्यात्खलु चित्तं तत्त्वे प्रणिधित्सदपि तत्त्वस्य तमसा पिहितत्वादणिमादिकमैश्वर्यमेव तत्त्वमभिमन्यमानं तत्प्रणिधित्सति प्रणिधत्ते च क्षणम् । अथ रजसा क्षिप्यमाणं तत्राप्यलब्धस्थितिं[1] तत्प्रियमात्रं भवति । शब्दा- दिषु पुनरस्य स्वरसवाही प्रेमा निरूढ एव । तदनेन विक्षिप्तं चित्तमुक्तम् । क्षिप्तं चित्तं दर्शयन्मूढमपि सूचयति—तदेव तमसेति । यदा हि तमो रजो विजित्य प्रसृतं तदा चित्तसत्त्वावरकतमःसमुत्सारणेऽशक्तत्वाद्रजसस्तमःस्थगितं चित्तमधर्माद्युपगच्छ- ति । अज्ञानं च विपर्ययज्ञानम् । अभावप्रत्ययालम्बनं च निद्राज्ञानमुक्तम् । ततश्च मूढावस्थाऽपि सूचितेति । अनैश्वर्यं सर्वत्रेच्छाप्रतीघातः । अधर्मादिव्याप्तं चित्तं भव- तीत्यर्थः । यदा तु तदेव चित्तसत्त्वमाविर्भूतसत्त्वमपगततमःपटलं सरजस्कं भवति तदा धर्मज्ञानवैराग्यैश्वर्याण्युपगच्छतीत्याह—प्रक्षीणेत्यादि । मोहस्तमस्तदेव चाऽऽवरणं प्रकर्षेण क्षीणं यस्य तत्तथोक्तम् । अत एव सर्वतो विशेषाविशेषलिङ्गमात्रालिङ्गपुरु- षेषु प्रद्योतमानम् । तथाऽपि न धर्मायैश्वर्याय च कल्पते प्रवृत्त्यभावादित्यत आह— अनुविद्धं रजोमात्रया । रजसः प्रवर्तकत्वादस्ति धर्मादि[2]प्रवृत्तिरित्यर्थः । तदनेन संप्रज्ञातसमाधिसंपन्नयोर्मधुभूमिकप्रज्ञाज्योतिषोर्मध्यमयोर्योगिनोश्चित्तसत्त्वं संगृहीतम् ।

संप्रत्यतिक्रान्तभावनीयस्य ध्यायिनश्चतुर्थस्य चित्तावस्थामाह—तदेव चित्तं रजो- लेशान्मलादपेतमत एव स्वरूपप्रतिष्ठम् । अभ्यासवैराग्यपुटपाकप्रबन्धविधूतरजस्तमो- मलस्य हि बुद्धिसत्त्वतपनीयस्य स्वरूपप्रतिष्ठस्य[3] विषयेन्द्रियप्रत्याहृतस्यानवासिताधि- कारतया च कार्यकारिणो विवेकख्यातिः परं कार्यमवशिष्यत इत्याह—सत्त्वपुरुषान्य- ताख्यातिमात्रं चित्तं धर्ममेघध्यानोपगं भवति । धर्ममेघश्च वक्ष्यते । अत्रैव योगिजन- प्रसिद्धिमाह—तदिति । सत्त्वपुरुषान्यताख्यातिमात्रं चित्तं धर्ममेघपर्यन्तं परं प्रसंख्यान- मित्याचक्षते ध्यायिनः । चित्तसामानाधिकरण्यं च धर्मधर्मिणोरभेदविवक्षया द्रष्टव्यम् ।

१ क. °तिविशेषात्तत्प्रि° । २ क. ज. झ. °दिरि° । ३ ख. ग. °तिष्ठायां वि° ।

नमित्याचक्षते ध्यायिनः । चितिशक्तिरपरिणामिन्यप्रतिसंक्रमा दर्शितविषया शुद्धा चानन्ता च सत्त्वगुणात्मिका चेयमतो विपरीता विवेकख्यातिरिति । अतस्तस्यां विरक्तं चित्तं तामपि ख्यातिं निरुणद्धि । तदवस्थं संस्कारोपगं भवति । स निर्बीजः समाधिः । न तत्र किंचित्संप्रज्ञायत इत्यसंप्रज्ञातः । द्विविधः स योगश्चित्तवृत्तिनिरोध इति ॥ २ ॥

---

विवेकख्यातेर्हानहेतुं चितिशक्तेश्चोपादानहेतुं निरोधसमाधिमवतारयितुं चितिशक्तेः साधुतामसाधुतां च विवेकख्यातेर्दर्शयति—चितिशक्तिरित्यादि । सुखदुःखमोहात्मकत्वमशुद्धिः । सुखमोहावपि हि विवेकिनं दुःखा कुरुतः । अतो दुःखवद्धेयौ । तथा चातिसुन्दरमप्यन्तवद्दुनोति । तेन तदपि हेयमेव विवेकिनः । सेयमशुद्धिरन्तश्च चितिशक्तौ पुरुषे न स्त इत्युक्तम्—शुद्धा चानन्ता चेति । ननु सुखदुःखमोहात्मकशब्दादीनियं चेतयमाना तदाकारापन्ना कथं विशुद्धा तदाकारपरिग्रहपरिवर्जने च कुर्वती कथमनन्तेत्यत उक्तम्—दर्शितविषयेति । दर्शितो विषयः शब्दादिर्यस्यै सा तथोक्ता । भवेदेतदेवं यदि बुद्धिवच्चितिशक्तिर्विषयाकारतामापद्येत, किंतु बुद्धिरेव विषयाकारेण परिणता सत्यतदाकारायै चितिशक्त्यै विषयमादर्शयति । ततः पुरुषश्चेतयत इत्युच्यते । ननु विषयाकारां बुद्धिमनारूढायाश्चितिशक्तेः कथं विषयवेदनं विषयारोहे वा कथं न तदाकारापत्तिरित्यत उक्तम्—अप्रतिसंक्रमेति । प्रतिसंक्रमः संचारः । स चितेर्नास्तीत्यर्थः । स एव कुतोऽस्या नास्तीत्यत उक्तम्—अपरिणामिनीति । न चितेस्त्रिविधोऽपि धर्मलक्षणावस्थालक्षणः परिणामोऽस्ति । येन क्रियारूपेण परिणता सती बुद्धिसंयोगेन परिणमेत चितिशक्तिः । असंक्रान्ताया अपि विषयसंवेदनमुपपादयिष्यते—तत्सिद्धं चितिशक्तिः शोभनेति । विवेकख्यातिस्तु बुद्धिसत्त्वात्मिकाऽशोभनेत्युक्तम्— अतश्चितिशक्तेर्विपरीतेति । यदा च विवेकख्यातिरपि हेया तदा कैव कथा वृत्त्यन्तराणां दोषबहुलानामिति भावः । ततस्तद्धेतोर्निरोधसमाधेरवतारो युज्यत इत्यत इत्याह—अतस्तस्यामिति । ज्ञानप्रसादमात्रेण हि परेण वैराग्येण विवेकख्यातिमपि निरुणद्धीत्यर्थः । अथ निरुद्धाशेषवृत्ति चित्तं कीदृशमित्यत आह- तदवस्थमित्यादि । स निरोधोऽवस्था यस्य तत्तथोक्तम् । निरोधस्य स्वरूपमाह—स निर्बीज इति । क्लेशसहितः कर्माशयो जात्यायुर्भोगबीजं तस्मान्निर्गत इति निर्बीजः । अस्यैव योगिजनप्रसिद्धामन्वर्थसंज्ञामादर्शयति—न तत्रेति । उपसंहरति—द्विविधः स योगश्चित्तवृत्तिनिरोध इति ॥२॥

तदवस्थे चेतसि विषयाभावाद्बुद्धिबोधात्मा पुरुषः किंस्वभाव इति—

**तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ ३ ॥**

स्वरूपप्रतिष्ठा तदानीं चितिशक्तिर्यथा कैवल्ये । व्युत्थानचित्ते तु सति तथाऽपि भवन्ती न तथा ॥ ३ ॥

कथं तर्हि, दर्शितविषयत्वात्—

**वृत्तिसारूप्यमितरत्र ॥ ४ ॥**

---

संप्रत्युत्तरसूत्रमवतार[1]यितुं चोदयति—तदवस्थे चेतसीति । किमाक्षेपे । तत्तदाकारपरिणतबुद्धिबोधात्मा खल्वयं पुरुषः सदाऽनुभूयते न तु बुद्धिबोधरहितोऽतोऽस्य पुरुषस्य बुद्धिबोधः स्वभावः सवितुरिव प्रकाशः । न च संस्कारशेषे चेतसि सोऽस्ति । न च स्वभावमपहाय भावो वर्तितुमर्हतीति भावः । स्यादेतत् । संस्कारशेषामपि बुद्धिं कस्मात्पुरुषो न बुध्यत इत्यत आह—विषयाभावादिति । न बुद्धिमात्रं पुरुषस्य विषयोऽपि तु पुरुषार्थवती बुद्धिः । विवेकख्यातिविषयभोगौ च पुरुषार्थौ । तौ च निरुद्धावस्थायां न स्त इति सिद्धो विषयाभाव इत्यर्थः । सूत्रेण परिहरति—तदा द्रष्टुः स्वरूपेऽवस्थानम् । स्वरूप इत्यारोपितं शान्तघोरमूढस्वरूपं निवर्तयति । पुरुषस्य हि चैतन्यं स्वरूपमनौपाधिकं न तु बुद्धिबोधः । शान्तादिरूप औपाधिको हि स स्फटिकस्येव स्वभावस्वच्छधवलस्य जपाकुसुमसंनिधानोपाधिररुणिमा । न चोपाधिनिवृत्तावुपहितनिवृत्तिरतिप्रसङ्गादिति भावः । स्वरूपस्य चाभेदेऽपि भेदं विकल्प्याधिकरणभाव उक्त इति । अयमेवार्थो भाष्यकृता द्योत्यते—स्वरूपप्रतिष्ठेति । तदानीं निरोधावस्थायां न व्युत्थानावस्थायामिति भावः । स्यादेतद्व्युत्थानावस्थायामप्रतिष्ठिता स्वरूपे चितिशक्तिर्निरोधावस्थायां प्रतितिष्ठन्ती परिणामिनी स्यात् । व्युत्थाने वा स्वरूपप्रतिष्ठाने व्युत्थाननिरोधयोरविशेष इत्यत आह—व्युत्थानचित्ते त्विति । न जातु कूटस्थनित्या चितिशक्तिः स्वरूपाच्च्यवते । तेन यथा निरोधे तथैव व्युत्थानेऽपि । न खलु शुक्तिकायाः प्रमाणविपर्ययज्ञानगोचरत्वेऽपि स्वरूपोदयव्ययौ भवतः । प्रतिपत्ता तु तथाभूतमप्यतथात्वेनाभिमन्यते । निरोधसमाधिमपेक्ष्य संप्रज्ञातोऽपि व्युत्थानमेवेति ॥ ३ ॥

सूत्रान्तरमवतारयितुं पृच्छति—कथं तर्हीति । यदि तथा[2] भवन्ती न तथा केन तर्हि प्रकारेण प्रकाशत इत्यर्थः । हेतुपदमध्याहृत्य सूत्रं पठति—दर्शितविषयत्वाद्वृत्तिसारूप्यमितरत्र । इतरत्र व्युत्थाने याश्चित्तवृत्तयः शान्तघोरमूढास्ता एवाविशि-

---

१ ख. ग. °र्लंबोद° । २ ख. ग. °थाऽपि भ° ।

व्युत्थाने याश्चित्तवृत्तयस्तदविशिष्टवृत्तिः पुरुषः । तथा च सूत्रम्—'एकमेव दर्शनं ख्यातिरेव दर्शनम्' इति । चित्तमयस्कान्तमणिकल्पं संनिधिमात्रोपकारि दृश्यत्वेन स्वं भवति

---

ष्टा अभिन्ना वृत्तयो यस्य पुरुषस्य स तथोक्तः । सारूप्यमित्यत्र सशब्द एकपर्यायः । एतदुक्तं भवति—जपाकुसुमस्फटिकयोरिव बुद्धिपुरुषयोः संनिधानादभेदग्रहे बुद्धिवृत्तीः पुरुषे समारोप्य शान्तोऽस्मि दुःखितोऽस्मि मूढोऽस्मीत्यध्यवस्यति । यथा मलिने दर्पणतले प्रतिबिम्बितं मुखं मलिनमारोप्य शोचत्यात्मानं मलिनोऽस्मीति । यद्यपि पुरुषसमारोपोऽपि शब्दादिविज्ञानवद्बुद्धिवृत्तिर्यद्यपि च प्राकृतत्वेनाचिद्रूपतयाऽनुभाव्यस्तथाऽपि बुद्धेः पुरुषत्वमापादयन्पुरुषवृत्तिरिवानुभव इवावभासते । तथा चायमविपर्ययोऽप्यात्मा विपर्ययवानिवाभोक्ताऽपि भोक्तेव विवेकख्यातिरहितोऽपि तत्सहित इव विवेकख्यात्या प्रकाशते । एतच्च " चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् " [ ४ । २२ ] इत्यत्र " सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः " [ २ । ३५ ] इत्यत्र चोपपादयिष्यते । एतच्च मतान्तरेऽपि सिद्धमित्याह—**तथा चेति** । पञ्चशिखाचार्यस्य सूत्रम् " एकमेव दर्शनं ख्यातिरेव दर्शनम् " इति । ननु कथमेकं दर्शनं यावता बुद्धेः शब्दादिविषया विवेकविषया च वृत्तिः प्राकृततया जडत्वेनानुभाव्या दर्शनं ततोऽन्यत्पुरुषस्य चैतन्यमनुभवो दर्शनमित्यत आह—**ख्यातिरेव दर्शनमिति** । उदयव्ययधर्मिणीं वृत्तिं ख्यातिं लौकिकीमभिप्रेत्यैतदुक्तम्—**एकमेवेति** । चैतन्यं तु पुरुषस्य स्वभावो न ख्यातिः । तत्तु न लोकप्रत्यक्षगोचरोऽपि त्वागमानुमानगोचर इत्यर्थः । तदनेन व्युत्थानावस्थायां मूलकारणमविद्यां दर्शयता तद्धेतुकः संयोगो भोगहेतुः स्वस्वामिभावोऽपि सूचित इति तमुपपादयन्नाह—**चित्तं स्वं भवति पुरुषस्य स्वामिन** इति संबन्धः । ननु चित्तजनितमुपकारं भजमानो हि चेतनश्चित्तस्येशिता । न चास्य तज्जनितोपकारसंभवस्तत्संबन्धादनुपकार्यत्वात्तत्संयोगतदुपकारभागित्वे परिणामप्रसङ्गादित्यत आह—**अयस्कान्तमणिकल्पं संनिधिमात्रोपकारि दृश्यत्वेनेति** । न पुरुषसंयुक्तं चित्तमपि तु तत्संनिहितम् । संनिधिश्च पुरुषस्य न देशतः कालतो वा तदसंयोगात्किंतु योग्यतालक्षणः । अस्ति च पुरुषस्य भोक्तृशक्तिश्चित्तस्य भोग्यशक्तिः । तदुक्तम्—**दृश्यत्वेनेति** । शब्दाद्याकारपरिणतस्य भोग्यत्वेनेत्यर्थः । भोगश्च यद्यपि शब्दाद्याकारा वृत्तिश्चित्तस्य धर्मस्तथाऽपि चित्तचैतन्ययोरभेदसमारोपाद्वृत्तिसारूप्यात्पुरुषस्येत्युक्तम् । तस्माच्चित्तेनासंयोगेऽपि तज्जनितोपकारभागिता पुरुषस्यापरिणामिता चेति सिद्धम् । ननु

---

१ ज. ख्यातेरन्यत्द° । ख. ख्यातिः । त° । २ ख. °तेः । चैतन्यं तु न ।

पुरुषस्य स्वामिनः। तस्माच्चित्तवृत्तिबोधे पुरुषस्यानादिः संबन्धो हेतुः ॥ ४ ॥

ताः पुनर्निरोद्धव्या बहुत्वे सति चित्तस्य—

**वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः ॥ ५ ॥**

क्लेशहेतुकाः कर्माशयप्रचये क्षेत्रीभूताः क्लिष्टाः । ख्यातिविषया गुणाधिकारविरोधिन्योऽक्लिष्टाः ।

---

स्वस्वामिसंबन्धो भोगहेतुरविद्यानिमित्तोऽविद्या तु किंनिमित्ता । न खल्वनिमित्तं कार्यमुत्पद्यते । यथाऽऽहुः—

स्वप्नादिवदविद्यायाः प्रवृत्तिस्तस्य किंकृता ।

इति शङ्कामुपसंहारव्याजेनोद्धरति—तस्माच्चित्तवृत्तिबोधे शान्तघोरमूढाकारचित्तवृत्त्युपभोगेऽनाद्यविद्यानिमित्तत्वादनादिः संयोगो हेतुरविद्यावासनयोश्च संतानो बीजाङ्कुरसंतानवदनादिरिति भावः ॥ ४ ॥

स्यादेतत्पुरुषो हि शक्य उपदिश्यते । न च वृत्तिनिरोधो वृत्तीरविज्ञाय शक्यः। न च सहस्रेणापि पुरुषायुषैरलमिमाः कश्चित्परिगणयितुम् । असंख्याताश्च कथं निरोद्धव्या इत्याशङ्क्य तासामियत्तास्वरूपप्रतिपादनपरं सूत्रमवतारयति—**ताः पुनर्निरोद्धव्या बहुत्वे सति चित्तस्य—वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः** । वृत्तिरूपोऽवयव्येकस्तस्य प्रमाणादयोऽवयवाः पञ्च । ततस्तदवयवा पञ्चतयी पञ्चावयवा वृत्तिर्भवति । ताश्च वृत्तयश्चैत्रमैत्रादिचित्तभेदाद्बह्व्य इति बहुवचनमुपपन्नम् । एतदुक्तं भवति—चैत्रो वा मैत्रो वाऽन्यो वा कश्चित्सर्वेषामेव तेषां वृत्तय पञ्चतय्य एव नाधिका इति । चित्तस्येति चैकवचनं जात्यभिप्रायम् । चित्तानामिति तु द्रष्टव्यम् । तासामवान्तरविशेषमनुष्ठानोपयोगिनं दर्शयति—क्लिष्टाक्लिष्टा इति । अक्लिष्टा उपादाय क्लिष्टा निरोद्धव्यास्ता अपि परेण वैराग्येणेति । अस्य व्याख्यानं—क्लेशहेतुका इति । क्लेशा अस्मितादयो हेतवः प्रवृत्तिकारणं यासां वृत्तीनां तास्तथोक्ताः । यद्वा पुरुषार्थप्रधानस्य रजस्तमोमयीनां हि वृत्तीनां क्लेशकारणत्वेन क्लेशायैव प्रवृत्तिः। क्लेशः क्लिष्टं तदासामस्तीति क्लिष्टा इति । यत एव क्लेशोपार्जनार्थममूषां प्रवृत्तिरत एव कर्माशयप्रचये क्षेत्रीभूताः । प्रमाणादिना खल्वयं प्रतिपत्ताऽर्थमवसाय तत्र सक्तो द्विष्टो वा कर्माशयमाचिनोतीति भवन्ति धर्माधर्मप्रचयप्रसवभूमयो वृत्तयः क्लिष्टा इति ।

अक्लिष्टा व्याचष्टे—ख्यातिविषया इति । विधूतरजस्तमसो बुद्धिसत्त्वस्य प्रशान्तवाहिनः प्रज्ञाप्रसादः ख्यातिस्तया विषयिण्या तद्विषयं सत्त्वपुरुषविवेकमुपलक्षयति।

---

१ ख. ङ. °ष्टा अक्लि° ।

क्लिष्टप्रवाहपतिता अप्यक्लिष्टाः। क्लिष्टच्छिद्रेष्वप्यक्लिष्टा भवन्ति। अक्लिष्टच्छिद्रेषु क्लिष्टा इति। तथाजातीयकाः संस्कारा वृत्तिभिरेव क्रियन्ते। संस्कारैश्च वृत्तय इति। एवं वृत्तिसंस्कारचक्रमनिशमावर्तते। तदेवंभूतं चित्तमवसिताधिकारमात्मकल्पेन व्यवतिष्ठते प्रलयं वा गच्छतीति। ताः क्लिष्टाश्चाक्लिष्टाश्च पञ्चधा वृत्तयः ॥ ५ ॥

प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ॥ ६ ॥

॥ ६ ॥

प्रत्यक्षानुमानागमाः प्रमाणानि ॥ ७ ॥

---

तेन सत्त्वपुरुषविवेकविषया यतोऽत एव गुणाधिकारविरोधिन्यः। कार्यारम्भणं हि गुणानामधिकारो विवेकख्यातिपर्यवसानं च तदिति चरिताधिकाराणां गुणानामधिकारं विरुन्धन्तीति। अतस्ता अक्लिष्टाः प्रमाणप्रभृतयो वृत्तयः। स्यादेतद्वीतरागजन्मादर्शनात्क्लिष्टवृत्तय एव सर्वे प्राणभृतः। न च क्लिष्टवृत्तिप्रवाहे भवितुमर्हन्त्यक्लिष्टा वृत्तयो न चामूषां भावेऽपि कार्यकारिता विरोधिमध्यपातित्वात्तस्मात्क्लिष्टानामक्लिष्टाभिर्निरोधस्तासां च वैराग्येण परेणेति मनोरथमात्रमित्यत आह—क्लिष्टप्रवाहेति। आगमानुमानाचार्योपदेशपरिशीलनलब्धजन्मनी अभ्यासवैराग्ये क्लिष्टच्छिद्रमन्तरा तत्र पतिताः स्वयमक्लिष्टा एव यद्यपि क्लिष्टप्रवाहपतिताः। न खलु शालग्रामे किरातशतसंकीर्णे प्रतिवसन्नपि ब्राह्मणः किरातो भवति। अक्लिष्टच्छिद्रेष्विति निदर्शनम्। क्लिष्टान्तरवर्तितया च क्लिष्टाभिरनभिभूता अक्लिष्टाः। स्वसंस्कारपरिपाकक्रमेण क्लिष्टा एव तावदभिभवन्तीत्याह—तथाजातीयका इति। अक्लिष्टाभिर्वृत्तिभिरक्लिष्टाः संस्कारा इत्यर्थः। तदिदं वृत्तिसंस्कारचक्रमनिशमावर्तते, आ निरोधसमाधेः। तदेवंभूतं चित्तं निरोधावस्थं संस्कारशेषं भूत्वाऽऽत्मकल्पेनावतिष्ठत इत्यापाततः प्रलयं वा गच्छतीति परमार्थतः पिण्डीकृत्य सूत्रार्थमाह—ता इति। पञ्चधेत्यर्थकथनमात्रं न तु शब्दवृत्तिव्याख्यानम्। तयपः प्रकारेऽस्मरणात् ॥ ५ ॥

ताः स्वसंज्ञाभिरुद्दिशति—प्रमाणविपर्ययविकल्पनिद्रास्मृतयः। निर्देशे यथावचनं विग्रहः। चार्थे द्वंद्वः समास इतरेतरयोगे। यथा—अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या [ २ । ५ ] इत्युक्तेऽपि न दिङ्मोहालातचक्रादिविभ्रमा व्युदस्यन्त एवमिहापि प्रमाणाद्यभिधानेऽपि वृत्त्यन्तरसद्भावशङ्का न व्युदस्येतेति तन्निरासाय वक्तव्यं पञ्चतय्य इति। एतावत्य एव वृत्तयो नापराः सन्तीति दर्शितं भवति ॥ ६ ॥

तत्र प्रमाणवृत्तिं विभजन्सामान्यलक्षणमाह—प्रत्यक्षानुमानागमाः प्रमाणानि।

---

१ ग. घ. ङ. च. °यः ॥ ६ ॥ तत्र—प्र°।

**इन्द्रियप्रणालिकया चित्तस्य बाह्यवस्तूपरागात्तद्विषया सामान्यविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षं प्रमाणम् । फलमविशिष्टः पौरुषेयश्चित्तवृत्तिबोधः । प्रतिसंवेदी पुरुष इत्युपरिष्टादुपपादयिष्यामः ।**

**अनुमेयस्य तुल्यजातीयेष्वनुवृत्तो भिन्नजातीयेभ्यो व्यावृत्तः संबन्धो यस्तद्विषया सामान्यावधारणप्रधाना वृत्तिरनुमानम् ।**

---

अनधिगततत्त्वबोधः पौरुषेयो व्यवहारहेतुः प्रमा । तत्करणं प्रमाणम् । विभागवचनं च न्यूनाधिकसंख्याव्यवच्छेदार्थम् । तत्र सकलप्रमाणमूलत्वात्प्रथमतः प्रत्यक्षं लक्षयति—**इन्द्रियेति** । **अर्थस्येति** समारोपितत्वं निषेधति । **तद्विषयेति** बाह्यगोचरतया ज्ञानाकारगोचरत्वं निवारयति । चित्तवर्तिनो ज्ञानाकारस्य बाह्यज्ञेयसंबन्धं दर्शयति—**बाह्यवस्तूपरागादिति** । व्यवहितस्य तदुपरागे हेतुमाह—**इन्द्रियप्रणालिकयेति** । सामान्यमात्रमर्थ इत्येके । विशेषा एवेत्यन्ये । सामान्यविशेषतद्वत्तेत्यपरे वादिनः प्रतिपन्नास्तन्निरासायाऽऽह—**सामान्यविशेषात्मन इति** । न तद्वत्ता किं तु तादात्म्यमर्थस्य । एतच्चैकान्तानभ्युपगम इत्यत्र प्रतिपादयिष्यते । अनुमानागमविषयात्प्रत्यक्षविषयं व्यवच्छिनत्ति—**विशेषावधारणप्रधानेति** । यद्यपि सामान्यमपि प्रत्यक्षे प्रतिभासते तथाऽपि विशेषं प्रत्युपसर्जनीभूतमित्यर्थः । एतच्च साक्षात्कारोपलक्षणपरम् । तथा च विवेकख्यातिरपि लक्षिता भवति । फलविप्रतिपत्तिं निराकरोति—**फलं पौरुषेयश्चित्तवृत्तिबोध इति** । ननु पुरुषवर्ती बोधः कथं चित्तगताया वृत्तेः फलम् । न हि खदिरगोचरव्यापारेण परशुना पलाशे छिदा क्रियत इत्यत आह—**अविशिष्ट इति** । न हि पुरुषगतो बोधो जन्यते, अपि तु चैतन्यमेव बुद्धिदर्पणप्रतिबिम्बितं बुद्धिवृत्त्याऽर्थाकारया तदाकारतामापद्यमानं फलम् । तच्च तथाभूतं बुद्धेरविशिष्टं बुद्ध्यात्मकं, वृत्तिश्च बुद्ध्यात्मिकेति सामानाधिकरण्याद्युक्तः प्रमाणफलभाव इत्यर्थः । एतच्चोपपादयिष्याम इत्याह—**प्रतिसंवेदीति** ।

प्रत्यक्षानन्तरं प्रवृत्त्यादिलिङ्गकश्रोतृबुद्ध्यनुमानप्रभवसंबन्धदर्शनसमुत्थतयाऽऽगमस्यानुमानजत्वादनुमितस्य चाऽऽगमेनान्वाख्यानादागमात्प्रागनुमानं लक्षयति—**अनुमेयस्येति** । जिज्ञासितधर्मविशिष्टो धर्म्यनुमेयस्तस्य तुल्यजातीयाः साध्यधर्मसामान्येन समानार्थाः सपक्षास्तेष्वनुवृत्त इत्यनेन विरुद्धत्वमसाधारणत्वं च साधनधर्मस्य निराकरोति । भिन्नजातीया असपक्षास्ते च सपक्षादन्ये तद्विरुद्धास्तदभावश्च तेभ्यो व्यावृत्तस्तदनेन साधारणानैकान्तिकत्वमपाकरोति । संबध्यत इति संबन्धो लिङ्गम् । अनेन पक्षधर्मतां दर्शयन्नसिद्धतां निवारयति । तद्विषया तन्निबन्धना, 'षिञ् बन्धने' [ धा० पा० ५ ] इत्यस्माद्विषयपदव्युत्पत्तेः । **सामान्यावधारणेति** ।

यथा देशान्तरप्राप्तेर्गतिमच्चन्द्रतारकं चैत्रवत्, विन्ध्यश्चाप्राप्तिरगतिः। आप्तेन दृष्टोऽनुमितो वाऽर्थः परत्र स्वबोधसंक्रान्तये शब्देनोपदिश्यते, शब्दात्तदर्थविषया वृत्तिः श्रोतुरागमः। यस्याश्रद्धेयार्थो वक्ता न दृष्टानुमितार्थः स आगमः प्लवते। मूलवक्तरि तु दृष्टानुमितार्थे निर्विप्लवः स्यात्॥ ७॥

## विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्॥ ८॥

---

प्रत्यक्षविषयाद्व्यवाच्छिनत्ति। संबन्धसंवेदनाधीनजन्मानुमानं विशेषेषु संबन्धग्रहणाभावेन सामान्यमेव सुकरसंबन्धग्रहणं गोचरयतीति। उदाहरणमाह—यथेति। चो हेत्वर्थे। विन्ध्योऽगतिर्यतस्तस्मात्तस्याप्राप्तिरतो गतिनिवृत्तौ प्राप्तेर्निवृत्तिर्देशान्तरप्राप्तेर्गतिमच्चन्द्रतारकं चैत्रवदिति सिद्धम्। आगमस्य वृत्तेर्लक्षणमाह—आप्तेनेति। तत्त्वदर्शनकारुण्यकरणपाटवाभिसंबन्ध आप्तिस्तया वर्तत इत्याप्तस्तेन दृष्टोऽनुमितो वाऽर्थः। श्रुतस्य पृथगनुपादानं तस्य दृष्टानुमितमूलत्वेन ताभ्यामेव चरितार्थत्वात्। आप्तचित्तवर्तिज्ञानसदृशस्य ज्ञानस्य श्रोतृचित्ते समुत्पादः स्वबोधसंक्रान्तिस्तस्यै, अर्थ उपदिश्यते, श्रोतृहिताहितप्राप्तिपरिहारोपायतया प्रज्ञाप्यते। शेषं सुगमम्। यस्याऽऽगमस्याश्रद्धेयार्थो वक्ता, यथा यान्येव दश दाडिमानि तानि षडपूपा भविष्यन्तीति। न दृष्टानुमितार्थो यथा चैत्यं वन्देत स्वर्गकाम इति। स आगमः प्लवते। नन्वेवं मन्वादीनामप्यागमः प्लवेत। न हि तेऽपि दृष्टानुमितार्थाः। यथाऽऽहुः—

> यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः।
> स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः॥

इत्यत आह—मूलवक्तरि त्विति। मूलवक्ता हि तत्रेश्वरो दृष्टानुमितार्थ इत्यर्थः॥ ७॥

**विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्।** विपर्यय इति लक्ष्यनिर्देशः। मिथ्याज्ञानमित्यादि लक्षणम्। यज्ज्ञानप्रतिभासि(स)रूपं, तद्रूपाप्रतिष्ठमेवातद्रूपप्रतिष्ठम्। यथाऽश्राद्धभोजीति। अतः संशयोऽपि संगृहीतः। एतावांस्तु विशेषः—तत्र ज्ञानारूढैवाप्रतिष्ठता द्विचन्द्रादेस्तु बाधज्ञानेन। नन्वेवं विकल्पोऽपि तद्रूपाप्रतिष्ठानाद्विचारतो विपर्ययः प्रसज्येतेत्यत आह—मिथ्याज्ञानमिति। अनेन हि सर्वजनीनानुभवसिद्धो बाध उक्तः। स चास्ति विपर्यये न तु विकल्पे। तेन व्यवहारात्। पण्डितरूपाणामेव

---

१ क. ख. च. °प्राप्तेर°। २ क. °था सद्द व°।

स कस्मान्न प्रमाणम् । यतः प्रमाणेन बाध्यते । भूतार्थविषयत्वात्प्रमाणस्य । तत्र प्रमाणेन बाधनमप्रमाणस्य दृष्टम् । तद्यथा–द्विचन्द्रदर्शनं सद्विषयेणैकचन्द्रदर्शनेन बाध्यत इति ।

सेयं पञ्चपर्वा भवत्यविद्या, अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशा इति। एत एव स्वसंज्ञाभिस्तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्र इति । एते चित्तमलप्रसङ्गेनाभिधास्यन्ते ॥ ८ ॥

**शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ ९ ॥**

स न प्रमाणोपारोही । न विपर्ययोपारोही[2] च । वस्तुशून्य-

---

तु विचारयतां तत्र बाधबुद्धेरिति । चोदयति—**स कस्मान्न प्रमाणम्** । नोत्तरेणोपजातविरोधिना ज्ञानेन पूर्वं बाधनीयमपि तु पूर्वेणैव प्रथममुपजातेनानुपजातविरोधिना परमिति भावः । परिहरति––**यतः प्रमाणेनेति** । यत्र हि पूर्वापेक्षा परोत्पत्तिस्तत्रैवमिह तु स्वकारणादन्योन्यानपेक्षे ज्ञाने जायेते । तेनोत्तरस्य पूर्वमनुपमृद्योदयमनासादयतस्तदपबाधात्मैवोदयो न तु पूर्वस्योत्तरबाधात्मा, तस्य तदानीमप्रसक्तेः । तस्मादनुपजातविरोधितां बाध्यत्वे हेतुरुपजातविरोधिता च बाधकत्वे । तस्माद्भूतार्थविषयत्वात्प्रमाणेनाप्रमाणस्य बाधनं सिद्धम् । उदाहरणमाह––**तत्र प्रमाणेनेति** ।

अस्य कुत्सितत्वं हानाय दर्शयति––**सेयं पञ्चेति** । अविद्यासामान्यमविद्यास्मितादिषु पञ्चसु पर्वस्वित्यर्थः । अव्यक्तमहदहंकारपञ्चतन्मात्रेष्वष्टस्वनात्मस्वात्मबुद्धिरविद्या तमः । एवं योगिनामष्टस्वणिमादिकेष्वैश्वर्येष्वश्रेयःसु श्रेयोबुद्धिरष्टविधो मोहः पूर्वस्माज्जघन्यः । स चास्मितोच्यते । यथा योगेनाष्टविधमैश्वर्यमुपादाय सिद्धो भूत्वा दृष्टानुश्रविकाञ्शब्दादीन्दश विषयान्भोक्ष्य इत्येवमात्मिका प्रतिपत्तिर्महामोहो रागः । एवमेतेनैवाभिसंधिना प्रवर्तमानस्य केनचित्प्रतिबद्धत्वादणिमादीनामनुत्पत्तौ तन्निबन्धनस्य दृष्टानुश्रविकविषयोपभोगस्यासिद्धेः प्रतिबन्धकविषयः क्रोधः स तामिस्राख्यो द्वेषः । एवमणिमादिगुणसंपत्तौ दृष्टानुश्रविकविषयप्रत्युपस्थाने च कल्पान्ते सर्वमेतत्प्रभङ्क्ष्यतीति यस्त्रासः सोऽभिनिवेशोऽन्धतामिस्रः । तदुक्तम्–

भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः ।
तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः (सां० का० ४९) ॥ इति ॥ ८ ॥

**शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः** । ननु शब्दज्ञानानुपाती चेदागमप्रमाणान्तरगतो विकल्पः प्रसज्येत । निर्वस्तुकत्वे वा विपर्ययः स्यादित्यत आह–**स नेति** । न प्रमाणविपर्ययान्तर्गतः । कस्माद्यतो वस्तुशून्यत्वेऽपीति प्रमाणान्तर्गतिं निषेधति ।

---

१ ग. अत । २ क. ख. च. छ. °ही । व° । ३ ज. °ताऽत्र बा° ।

त्वेऽपि शब्दज्ञानमाहात्म्यनिबन्धनो व्यवहारो दृश्यते। तद्यथा—चैतन्यं पुरुषस्य स्वरूपमिति। यदा चितिरेव [1] पुरुषस्तदा किमत्र केन व्यपदिश्यते।

भवति च व्यपदेशे वृत्तिः। यथा चैत्रस्य गौरिति। तथा प्रतिषिद्धवस्तुधर्मो निष्क्रियः पुरुषः, तिष्ठति बाणः स्थास्यति स्थित इति। गतिनिवृत्तौ धात्वर्थमात्रं गम्यते। तथाऽनुत्पत्तिधर्मा पुरुष इति, उत्पत्तिधर्मस्याभावमात्रमवगम्यते न पुरुषान्वयी धर्मः। तस्माद्विकल्पितः स धर्मस्तेन चास्ति व्यवहार इति॥९॥

---

शब्दज्ञानमाहात्म्यनिबन्धन इति विपर्ययान्तर्गतिम्। एतदुक्तं भवति—क्वचिदभेदे भेदमारोपयति क्वचित्पुनर्भिन्नानामभेदम्। ततो भेदस्याभेदस्य च वस्तुनोऽभावात्तदाभासो विकल्पो न प्रमाणं नापि विपर्ययो व्यवहाराविसंवादादिति। शास्त्रप्रसिद्धमुदाहरणमाह—तद्यथेति। किं विशेष्यं केन व्यपदिश्यते विशेष्यते नाभेदे विशेष्यविशेषणभावो न हि गवा गौर्विशेष्यते। किंतु भिन्नेनैव चैत्रेण।

तदिदमाह—भवति च व्यपदेशे वृत्तिः। व्यपदेशव्यपदेश्ययोर्भावो [2] व्यपदेशः। विशेषणविशेष्यभाव इति यावत्। तस्मिन्वृत्तिर्वाक्यस्य यथा चैत्रस्य गौरिति। शास्त्रीयमेवोदाहरणान्तरं समुच्चिनोति—तथेति। प्रतिषिद्धो वस्तुनः पृथिव्यादेर्धर्मः परिस्पन्दो यस्य स तथोक्तः। कोऽसौ निष्क्रियः पुरुषः। न खलु सांख्यीये राद्धान्तेऽभावो नाम कश्चिदस्ति वस्तुधर्मो येन पुरुषो विशेष्येतेत्यर्थः। क्वचित्पाठः प्रतिषिद्धा वस्तुधर्मा इति। तस्यार्थः—प्रतिषेधव्याप्ताः प्रतिषिद्धा न वस्तुधर्माणां तद्व्याप्यता भावाभावयोरसंबन्धादथ च तथा प्रतीतिरिति। लौकिकमुदाहरणमाह—तिष्ठति बाण इति। यथा हि पचति भिनत्तीत्यत्र पूर्वापरीभूतः कर्मक्षणप्रचय एकफलावच्छिन्नः प्रतीयत एवं तिष्ठतीत्यत्रापि। पूर्वापरीभावमेवाऽऽह—स्थास्यति स्थित इति। ननु भवतु पाकवत्पूर्वापरीभूतयाऽवस्थानक्रियया बाणाद्भिन्नया बाणस्य व्यपदेश इत्यत आह—गतिनिवृत्तौ धात्वर्थमात्रं गम्यते। गतिनिवृत्तिरेव तावत्कल्पिता तस्या अपि भावरूपत्वं तत्रापि पूर्वापरीभाव इत्यहो कल्पनापरम्परेत्यर्थः। अभावः कल्पितो भाव इव चानुगत इव च सर्वपुरुषेषु गम्यते न पुनः पुरुषव्यतिरिक्तो धर्मः कश्चिदित्युदाहरणान्तरमाह—तथाऽनुत्पत्तिधर्मेति। प्रमाणविपर्ययाभ्यामन्या न विकल्पवृत्तिरिति वादिनो बहवः प्रतिपेदिरे। तत्प्रतिबोधनायोदाहरणप्रपञ्च इति मन्तव्यम्॥९॥

---

१ ख. छ. चिदेव। २ झ. °देश्यव्यपदेशकयो°।

अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ १० ॥

सा च संप्रबोधे प्रत्यवमर्शात्प्रत्ययविशेषः । कथं, सुखमहमस्वाप्सम् । प्रसन्नं मे मनः प्रज्ञां मे विशारदीं करोति । दुःखमहमस्वाप्सं स्त्यानं मे मनो भ्रमत्यनवस्थितम् । गाढं मूढोऽहमस्वाप्सम् । गुरूणि मे गात्राणि । क्लान्तं मे चित्तम् । अलसं मुषितमिव तिष्ठतीति । स खल्वयं प्रबुद्धस्य प्रत्यवमर्शो न स्यादसति प्रत्ययानुभवे । तदाश्रिताः स्मृतयश्च तद्विषया न स्युः । तस्मात्प्रत्ययविशेषो निद्रा । सा च समाधावितरप्रत्ययवन्निरोद्धव्येति ॥ १० ॥

---

अभावप्रत्ययालम्बना वृत्तिर्निद्रा । अविकृतं हि वृत्तिपदमनुवादकम् । प्रमाणविपर्ययविकल्पस्मृतीनां वृत्तित्वं प्रति परीक्षकाणामविप्रतिपत्तेः । अतस्तदनूद्यते विशेषविधानाय । निद्रायास्तु वृत्तित्वे परीक्षकाणामस्ति विप्रतिपत्तिरिति वृत्तित्वं विधेयम् । न च प्रकृतमनुवादकं विधानाय कल्पत इति पुनर्वृत्तिग्रहणम् । जाग्रत्स्वप्नवृत्तीनामभावस्तस्य प्रत्ययः कारणं बुद्धिसत्त्वाच्छादकं तमस्तदेवाऽऽलम्बनं विषयो यस्याः सा तथोक्ता वृत्तिर्निद्रा । बुद्धिसत्त्वे हि त्रिगुणे यदा सत्त्वरजसी अभिभूय समस्तकरणावरकमाविरस्ति तमस्तदा बुद्धेर्विषयाकारपरिणामाभावादुद्भूततमोमयीं बुद्धिमवबुध्यमानः पुरुषः सुषुप्तोऽन्तःसंज्ञ इत्युच्यते । कस्मात्पुनर्निरुद्धकैवल्ययोरिव वृत्त्यभाव एव न निद्रेत्यत आह—सा च संप्रबोधे प्रत्यवमर्शात्सोपपत्तिकात्स्मरणात्प्रत्ययविशेषः । कथं, यदा हि सत्त्वसचिवं तम आविरस्ति तदेदृशः प्रत्यवमर्शः सुप्तोत्थितस्य भवति सुखमहमस्वाप्सं प्रसन्नं मे मनः प्रज्ञां मे विशारदीं करोति स्वच्छीं करोतीति । यदा तु रजःसचिवं तम आविरस्ति तदेदृशः प्रत्यवमर्श इत्याह—दुःखमहमस्वाप्सं स्त्यानमकर्मण्यं मे मनः कस्माद्यतो भ्रमत्यनवस्थितम् । नितान्ताभिभूतरजःसत्त्वे तमःसमुल्लासे स्वापे प्रबुद्धस्य प्रत्यवमर्शमाह—गाढं मूढोऽहमस्वाप्सं गुरूणि मे गात्राणि क्लान्तं मे चित्तमलसं मुषितमिव तिष्ठतीति । साध्यव्यतिरेके हेतुव्यतिरेकमाह—स खल्वयमिति । प्रबुद्धस्य प्रबुद्धमात्रस्य बोधकाले । प्रत्ययानुभवे वृत्त्यभावकारणानुभवे (तदाश्रिताः । बोधजन्याः । तद्विषयाः । वृत्त्यभावकारणविषयाः) इत्यर्थः । ननु प्रमाणादयो व्युत्थानचित्ताधिकरणा निरुध्यन्तां समाधिप्रतिपक्षत्वान्निद्रायास्त्वेकाग्रवृत्तितुल्यायाः कथं समाधिप्रतिपक्षतेत्यत आह—सा च समाधावितीति । एकाग्रतुल्याऽपि तामसत्वेन निद्रा सबीजनिर्बीजसमाधिप्रतिपक्षेति साऽपि निरोद्धव्येत्यर्थः ॥ १० ॥

**अनुभूतविषयासंप्रमोषः स्मृतिः ॥ ११ ॥**

किं प्रत्ययस्य चित्तं स्मरत्याहोस्विद्विषयस्येति । ग्राह्योपरक्तः प्रत्ययो ग्राह्यग्रहणोभयाकारनिर्भासस्त[1]ज्जातीयकं संस्कारमारभते । स संस्कारः स्वव्यञ्जकाञ्जनस्त[2]दाकारामेव ग्राह्यग्रहणोभयात्मिकां स्मृतिं जनयति ।

तत्र ग्रहणाकारपूर्वा बुद्धिः । ग्राह्याकारपूर्वा स्मृतिः । सा च द्वयी–भावितस्मर्तव्या चाभावितस्मर्तव्या च । स्वप्ने भावितस्म-

---

**अनुभूतविषयासंप्रमोषः स्मृतिः** । प्रमाणादिभिरनुभूते विषये योऽसंप्रमोषोऽस्तेयं सा स्मृतिः । संस्कारमात्रजस्य हि ज्ञानस्य संस्कारकारणानुभवावभासितो विषय आत्मीयस्तदधिकविषयपरिग्रहस्तु संप्रमोषः स्तेयम् । कस्मात्साहश्यात् । 'मुष स्तेये' [ धा० पा० ९ ] इत्यस्मात्प्रमोषपदव्युत्पत्तेः । एतदुक्तं भवति— सर्वे प्रमाणादयोऽनधिगतमर्थं सामान्यतः प्रकारतो वाऽधिगमयन्ति । स्मृतिः पुनर्न पूर्वानुभवमर्यादामतिक्रामति । तद्विषया तदूनविषया वा न तु तदधिकविषया । सोऽयं वृत्त्यन्तराद्विशेषः स्मृतेरिति । विमृशति—**किं प्रत्ययस्येति** । ग्राह्यप्रवणत्वादनुभवस्य स्वानुभवाभावात्तज्जः संस्कारो ग्राह्यमेव स्मारयतीति प्रतिभाति। अनुभवमात्रजनितत्वाच्चानुभवमेव वेति। विमृश्योपपत्तित उभयस्मरणमवधारयति—ग्राह्यप्रवणतया **ग्राह्योपरक्तः** । परमार्थतस्तु ग्राह्यग्रहणे एवोभयं तयोराकारं स्वरूपं निर्भासयति प्रकाशयति । स्वव्यञ्जकं कारणमञ्जनमाकारो यस्य स तथोक्तः । स्वकारणाकार इत्यर्थः[3] । ( स्वकारणाकार )व्यञ्जकमुद्बोधकं तेनाञ्जनं फलाभिमुखीकरणं यस्येति वेत्यर्थः ।

ननु यदि कारणविचारेण बुद्धिस्मरणयोः सारूप्यं कस्तर्हि भेद इत्यत आह— **तत्र ग्रहणेति** । ग्रहणमुपादानं, न च गृहीतस्य[4]ोपात्तस्योपादानं संभवति। तदनेनानधिगतबोधनं बुद्धिरित्युक्तम् । ग्रहणाकारो ग्रहणरूपं पूर्वं प्रधानं यस्याः सा तथोक्ता । विकल्पितश्चायमभेदेऽपि गुणप्रधानभाव इति ग्राह्याकारः पूर्वः प्रथमो यस्याः सा तथोक्ता । इदमेव च ग्राह्याकारस्य ग्राह्यस्य पूर्वत्वं यद्वृत्त्यन्तराविषयीकृतत्वमर्थस्य । तदनेन वृत्त्यन्तरविषयीकृतगोचरा स्मृतिरित्युक्तं भवति । सोऽयमसंप्रमोष इति। नन्वस्ति स्मृतेरपि संप्रमोषः। दर्शयति हि पित्रादेरतीतस्य देशकालान्तरानुभूतस्याननुभूतपरदेशकालान्तरसंबन्धः(न्धं) स्वप्न इत्यत आह—**सा च द्वयीति** । भावितः कल्पितः स्मर्तव्यो यया सा तथोक्ता । अभावितोऽकल्पितः पारमार्थिक इति यावत् । नेयं

---

१ ग. घ. ङ. च. °स्तथाजाती° । २ ख. °स्तदनुभवाने° । ३ ख. ज. °र्थः । न° । ४ ङ. °स्योपादा° ।

